विभक्तानवगच्छेयुर्लेख्यमप्यन्तरेण तान्॥ ७॥

(नारद १३।३८—३९—४०)

तथा बृहस्पतिः।

साहसं स्थावरं न्यासः प्राग्विभागश्च रिक्थिनाम्।
अनुमानेन विज्ञेयं न स्यातां पत्रसाक्षिणौ॥
बलानुबन्धव्याघातहोढं साहसभावकम्।
स्वस्य भोगः स्थावरस्य विभागस्य पृथग्धनम्॥
पृथगायव्ययधनाः कुसीदञ्च परस्परम्।
वणिक्पथञ्च ये कुर्य्युर्विभक्तास्ते न संशयः॥ ८॥

नारदवचने भागलेख्येनेत्यस्यार्थमाह तथा लिखितेन वेति। बलवदिति। साक्षिभ्यो लिखितं गुर्विति वचनादिति शेषः। पृथक्कार्य्येति। पृथगुपादानादि-कार्य्यप्रवर्त्तनादित्यर्थः। परिग्रहाः परिवारा दासादयः, प्रतिग्रहार्थत्वे ग्रहणे-त्यनेन पौनरुक्त्यापत्तेः। पृथक् ज्ञेयाः प्रत्येकं स्वातन्त्र्यविषयाः ज्ञेयाः। पाक-धर्मो वैश्वदेवादि कर्म। आगमो धनागमोपायः क्रयादिः। व्ययो धन-वियोगः। प्रतिभाव्यं लग्नकत्वत्। स्वरिक्थतः स्वस्वरिक्थतः। लेख्येति इतरप्रमाणसामान्योपलक्षणम्। साहसं बलात् समक्षक्रियमाणं पारुष्यादि। तथाच नारदः। सहसा क्रियते कर्म यत्किञ्चिद्बलदर्पितैः। तत्साहसमिति प्रोक्तं सहोबलमिहोच्यते॥ मनुष्यमारणं स्तेयं परदाराभिमर्षणम्। पारुष्य-मुभयञ्चेह साहसं पञ्चधा स्मृतम्॥ इति। स्थावरं स्थावरगततदीयत्वम्। न स्यातामिति। पत्रसाक्षिणोरभावे साहसादयोऽनुमानादिना निश्चेया इत्यर्थः। साहसादीनामनुमाने क्रमेण लिङ्गान्याह बलानुबन्धेत्यादि बलानुबन्धो बलवत्त्व-प्रयुक्त चेष्टाविशेषः। व्याघातः ताड़नचिह्नम्। होढ़ो लोप्त्रं, तत् सर्वं साहसस्य भावकं ज्ञापकमित्यर्थः। स्थावरे तदीयत्वलिङ्गान्याह स्वस्येति। स्वस्य स्वस्वामिक-स्थावरस्य पृथक्भोग इत्यर्थः। विभागलिङ्गान्याह पृथग्धनमिति। पृथगाय-व्ययधनाः पृथग्धनायव्ययाः। कुसीदम् ऋणादानं परस्परमित्यर्थः॥ ६—८॥

एको भ्राता ददाति अपरश्च गृह्णाति गृहादिकम् आय-व्ययस्थितिश्च पृथक् पृथक् एकेन ऋणादिषु क्रियमाणेषु

अपरश्च साक्षी प्रतिभूर्वा क्रियते परस्परं वा ऋणादिकव्यवहारः एको यत्किञ्चिद्द्रव्यम् अन्यतः क्रीत्वा वाणिज्यार्थं भ्रातरि विक्रीणीते एवमादिका एकैकापि क्रिया परस्परं विभक्तानामेव सम्भवति तया विभागानुमानं धीमद्भिरनुसन्धेयमिति ॥ ९ ॥

न च येषामेताः क्रिया इत्येतच्छब्देन बह्वीनामुपादानात् मिलितानामेव गमकत्वं वाच्यं न्यायमूलत्वात् वचनानाम् एकैकत्रापि च तारतम्याविशेषाविशेषात् ॥ १० ॥

न स्यातां पत्रसाक्षिणावित्यनेन पत्रसाक्षिणोरभावे अनुमानमनुसरणीयमित्युक्तम् ॥ ११ ॥

दानग्रहणेत्याद्युक्तवचनानि व्याकरोति एको भ्रातेत्यादि। इदं दानग्रहणेत्यस्य विवरणम्। गृहक्षेत्रेत्यस्य विवरणं गृहादिकमिति, आयेति धनस्येति शेषः। एकेनेति। इदं साक्षित्व प्रातिभाव्यमित्यस्य विवरणम्। कुसीदमिति विवृणोति परस्परं वेति। वणिक्पथश्चेत्यस्यार्थमाह एक इति। विभक्तानामेवेति। एतेनोक्तक्रियासु विभागस्य व्याप्तिर्दर्शिता। न्यायमूलत्वादिति। न्यायो व्याप्तिस्तन्मूलत्वात् वचनानां विभागलिङ्गवचनानाम्। एकैकत्रापीति। तारतम्याविशेषो व्याप्तिः तस्याः प्रत्येकक्रियास्वेवाविशेषात् सत्त्वादित्यर्थः। तथाच प्रत्येकस्यैव व्याप्यत्वात् प्रत्येकस्यैव गमकत्वं न तु मिलितानाम्। वचनानामपि तथैवाभिप्रायः अन्यथा धूमालोकादीनामपि मिलितानां किमिति वह्न्यादिगमकतां नाङ्गीकुरुषे इति भावः। बृहस्पतिवचने न स्यातामित्यादेरर्थमाह न स्यातामिति ॥ ९—११ ॥

## पञ्चदशः अध्यायः।

नाचार्य्यगौरवपराहतदायभाग-

तत्त्वप्रबोधजनरञ्जनमत्र शक्यम्।

किन्तु प्रमाणपरतन्त्रधियां मुनीनां
संवादमात्रकृतये कृतिनः प्रयत्नः ॥ १ ॥
बहुविधपूर्वनिबन्धृ-व्याख्यासञ्जातसंशयस्यैतत् ।
जीमूतवाहनकृतं प्रकरणमपनुत्तये ध्येयम् ॥ २ ॥
पारिभद्रकुलोद्भूतः श्रीमान् जीमूतवाहनः ।
दायभागं चकारेमं विदुषां संशयच्छिदे ॥ ३ ॥

इति पारिभद्रीय महामहोपाध्याय
श्रीजीमूतवाहनकृतौ धर्मरत्ने
दायभागः समाप्तः ।

नाचार्य्येति । आचार्य्याणां श्रीकरमिश्रादीनां गौरवेण आदरेण पराहतौ दूरीभूतौ दायभागतत्त्वस्य प्रबोधौ यथार्थज्ञानं येषां तादृशजनानां रञ्जनमनुरञ्जनम् अवानेन ग्रन्थेन न शक्यम् । तर्हि प्रायशो विफलोऽत्र प्रयत्न इत्यत आह किन्त्विति । प्रमाणं वेदादि तत्परतन्त्रा तदधीना धीर्येषां तेषां मुनीनां मन्वादीनां संवादः परस्परवचनाविरोधः तन्मात्रकृतये तन्मात्रार्थं कृतिनो मम प्रयत्न इत्यर्थः सर्वेषामेव मुनीनां वेदार्थनिबन्धृत्वेन वेदानां परस्परविरोधाभावात् तत्तद्वचनेऽपि विरोधो नास्त्येव आपाततः प्रतीयमानतद्विरोधो न्यायसचिवानुमानेन तेषां तात्पर्य्यार्थविशेषमवधार्य्य परिहृतो यदि तदा अनेनैवास्माकं प्रयत्नसार्थक्ये अविवेचकानुरञ्जनस्य अकिञ्चित्करत्वमिति भावः । मनीषा संवादेति पाठे प्रमाणदर्शिनां बुद्धिसंवादकरणाय तैः स्वयं पर्य्यालोचनया यन्निर्णीतम् अस्माभिरपि तदेवोपनिबद्धमित्येतत् दर्शनार्थमेव प्रयत्न इत्यर्थः ।

सेतू भवाब्धेर्जगदेकहेतू कृत्वा हृदब्जे परदेवताङ्घ्री ।
धीमद्दुरूहे खलु दायभागे श्रीकृष्णविप्रो विवृतिं वितेने ॥
टिप्पनी विशदार्थेयं निगूढार्थप्रकाशिनी ।
धीरामोदकरी नाम्ना दायभागप्रबोधनी ॥

इति श्रीकृष्णतर्कालङ्कारभट्टाचार्य्यकृता दायभागप्रबोधनी समाप्ता ।

---